## ॥ अथ नवरात्र-प्रथमदिवसे योगनिद्रादुर्गापूजा ॥

कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, श्रीमहाकाली महालक्ष्मी महासरस्वतीप्रीत्यर्थं आश्विनशुक्ल प्रतिपदि योगनिद्रादुर्गापूजां करिष्ये॥ इति सङ्कल्प्य भूशुद्धयादिपीठपूजान्तं कृत्वा ॥

**[अथ तत्रागमोक्तप्रकारेण सङ्क्षेपभूशुद्ध्यादिविधिः ।।**

**ॐलं पृथिव्यैः नमः ।** इति भूमि सम्पूज्य तत्र
**'ॐ ह्री आधारशक्तिकमलासनाय नमः'** इत्यासने उपविश्य
**'ॐ ह्रीं चामुण्डायै नमः'** इति शिखांबध्वा
स्ववामे **'गुरुभ्यो नमः'** दक्षे **' गणपतये नमः'** इति गुरुवन्दनं कृत्वा'
**ॐ जयध्वनिमन्त्रमातः स्वाहा'** इति घण्टां वादयिता
**'ॐ ह्रीं सर्वविघ्नानुत्सारय हुं फट् स्वाहा'** इति विघ्नानुत्सार्य
**'ॐ नमः सहस्रार हुं फट्** ' इति तालत्रयेण दिग्बन्धनं कृत्वा
**तीक्ष्णदंष्ट्रेति महाकाय कल्पान्त दहनोपम।**
**भैरवाय नमस्तुभ्यं अनुज्ञा दातुमर्हसि ।।** इति क्षेत्रपालं सम्प्रार्थ्य
**ॐ हंसःसोऽहमिति** भूतशुद्धि पूर्वोत्तमाणप्रतिष्ठा मातृकान्यासं कलशार्चनं शङ्खार्चनं च कृत्वा,
**मण्डपदेवताभ्यो नमः । द्वारदेवताभ्यो नमः । द्वारपालेभ्यो नमः । पीठदेवताभ्यो नमः।** इति पूजयेत् ]
नवशक्तिपूजां करिष्ये इति संकल्प्य
**ॐ जयायै नमः।**
**ॐ विजयायै नमः।**
**ॐ भद्रायै नमः।**
**ॐ भद्रकाल्यै नमः।**
**ॐ सुमुख्यै नमः।**
**ॐ दुर्मुख्य नमः।**
**ॐ व्याघ्रमुख्यै नमः।**
**ॐ सिंहमुख्यै नमः।**
**ॐ दुर्गायै नमः॥**

इति नवशक्तिपूजां समर्पयामि ॥
रक्तवर्णा गजारूढां रक्तमाल्याम्बरां शुभाम् ।
चतुर्भुजां शक्तिशूलगदामभयधारिणीम् ।
देवीं समर्चयेद्धीमान्प्रथमायां विशेषतः ॥
ॐ नमो भगवत्यै वज्रनखदंष्ट्रायुधमहासिंहवाहनायै योगपद्मपीठात्मिकायै नमः सुवर्णपीठं कल्पयामि ।।

आवाहनम्-
स्वात्मसंस्थामजां शुद्धां स्वामद्य परमेश्वरि ।
अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ॥

ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥
भूर्भुवः स्स्वरों सशक्ति- साङ्ग- सायुध- सवाहन- सपरिवार- सर्वालङ्कारभूषितां श्रीयोगनिद्रादुर्गामावाहयामि ।।
आवाहिता भव ।
संस्थापिता भव ।
सन्निहिता भव ।
सन्निरुद्धा भव ।
सम्मुखीकरणा भव ।
सुप्रसन्ना भव' इति षण्मुद्राः प्रदर्श्य ॥
ॐ कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् ।। इदमर्घ्यम् ।।
ऋष्यादिन्यासक्रम-
मरीचिः काश्यप ऋषिः । त्रिष्टुप् छन्दः । दुर्गा देवता ।
षडङ्गन्यासः-
ॐ जातवेदसे सुनवाम हृदयाय नमः ।
ॐ सोममरातीयतः शिरसे स्वाहा ।
ॐ निदहाति वेदः शिखायै वषट् ।
ॐ स नः पर्षदति कवचाय हुम् ।
ॐ दुर्गाणि विश्वा नावेव नेत्रत्रयाय वौषट् ।
ॐ सिन्धु दुरितात्यग्निः अस्त्राय फट् ॥
ध्यानम्-
या माया मधुकैटभप्रमथिनी या माहिषोन्मर्दिनी ।

**या धूम्रेक्षण चण्डमुण्डमथिनी या रक्तबीजाशिनी ॥**
**या सा शुम्भनिशुम्भदैत्यदलिनी या सिद्धलक्ष्मीः स्थिरा।**
**सा चण्डी नवकोटिमूर्तिसहिता मां पातु दुर्गाम्बिका ।।**

ॐ जातवेदसे ० दुरितात्यग्निः !! इति जपम् ।।
॥ अथ पञ्चोपचारपूजां करिष्ये ॥
ॐ लं पृथिव्यात्मिकायै नमः । गन्धं समर्पयामि ॥
ॐ हं आकाशात्मिकायै • पुष्पं स ० ॥
ॐ यं वाय्वात्मिकायै • धूपं स ० ॥
ॐ रं तेजोमय्यै० दीपं स० ॥
ॐ वं अमृतात्मिकायै ० नैवेद्यं स ० ॥
इति पञ्चोपचारपूजां समर्प्य ॥
अथ द्वादशनामपूजां करिष्ये ॥

**ॐ विभूत्यै नमः ।**
**ॐ उन्नत्यै नमः ।**
**ॐ कान्त्यै नमः ।**
**ॐ सृष्ट्यै नमः ।**
**ॐ कीर्त्यै नमः ।**
**ॐ सन्नुत्यै नमः ।**
**ॐ पुष्ट्यै नमः ।**
**ॐ उत्कृष्ट्यै नमः ।**
**ॐ ऋद्ध्यै नमः ।**
**ॐ वज्रनखदंष्ट्रायै नमः ।**
**ॐ देव्यै नमः ।**
**ॐ सिंहवाहनायै नमः ।।**
इति द्वादशनामपूजां समर्पयामि ॥

## ॥ अथ द्वितीयायां देवजातादुर्गापूजा ॥

कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, श्रीमहाकाली महालक्ष्मी महासरस्वतीप्रीत्यर्थं आश्विनशुक्लद्वितीयायां **देवजातादुर्गापूजां** करिष्ये। ॥ इति सङ्कल्प्य भूशुद्ध्यादिपीठपूजान्तं कृत्वा ॥

**[अथ तत्रागमोक्तप्रकारेण सङ्क्षेपभूशुद्ध्यादिविधिः ॥**

**ॐलं पृथिव्यैः नमः ।** इति भूमि सम्पूज्य तत्र
**'ॐ ही आधारशक्तिकमलासनाय नमः'** इत्यासने उपविश्य
**'ॐ ह्रीं चामुण्डायै नमः'** इति शिखांबध्वा
स्ववामे **'गुरुभ्यो नमः'** दक्षे **' गणपतये नमः'** इति गुरुवन्दनं कृत्वा'
**ॐ जयध्वनिमन्त्रमातः स्वाहा'** इति घण्टां वादयिता
**'ॐ ह्रीं सर्वविघ्नानुत्सारय हुं फट् स्वाहा'** इति विघ्नानुत्सार्य
**'ॐ नमः सहस्रार हुं फट्** ' इति तालत्रयेण दिग्बन्धनं कृत्वा
**तीक्ष्णदंष्ट्रेति महाकाय कल्पान्त दहनोपम।**
**भैरवाय नमस्तुभ्यं अनुज्ञा दातुमर्हसि ॥** इति क्षेत्रपालं सम्प्राथ्य
**ॐ हंसःसोऽहमिति** भूतशुद्धि पूर्वोत्तमाणप्रतिष्ठा मातृकान्यासं कलशार्चनं शङ्खार्चनं च कृत्वा,
**मण्डपदेवताभ्यो नमः । द्वारदेवताभ्यो नमः । द्वारपालेभ्यो नमः । पीठदेवताभ्यो नमः।** इति पूजयेत् ]
नवशक्तिपूजां करिष्ये इति संकल्प्य

**ॐ धनञ्जयायै नमः**
**ॐ सुरश्रेष्ठायै नमः।**
**ॐ नन्दजायै नमः।**
**ॐ द्विरदासनायै नमः।**

ॐ वह्निजायै नमः।
ॐ रौद्यै नमः।
ॐ दुर्गायै नमः।
ॐ भीमायै नमः।
ॐ लक्ष्म्यै नमः।

नवशक्तिपूजां समर्पयामि ॥

हंसारूढां शुक्लवर्णां शुक्लमाल्याद्यलकृताम्।
चतुर्भुजां स्रुक्स्रुवौ च कमण्डल्वक्षमालिकाम्।
बिभ्रतीं पूजयेद्देवीं द्वितीयायां सदा नृप ॥
ॐ नमो भगवत्यै सुवर्णपीठं कल्पयामि ॥
स्वात्मसंस्थामजां मूर्तावावाहयाम्यहम् ॥

ॐ नमो भगवत्यै वज्रनखदंष्ट्रायुधमहासिंहवाहनायै योगपद्मपीठात्मिकायै नमः सुवर्णपीठं कल्पयामि ॥

**आवाहनम्-**

स्वात्मसंस्थामजां शुद्धां स्वामद्य परमेश्वरि ।
अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ॥

ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥
भूर्भुवः स्स्वरों सशक्ति- साङ्ग- सायुध- सवाहन- सपरिवार- सर्वालङ्कारभूषितां देवजातादुर्गामावाहयामि ॥
आवाहिता भव ।
संस्थापिता भव ।
सन्निहिता भव ।
सन्निरुद्धा भव ।

सम्मुखीकरणा भव ।
सुप्रसन्ना भव' इति षण्मुद्राः प्रदर्श्य ॥
**ॐ कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् ।।** इदमर्घ्यम् ।।

**ऋष्यादिन्यासक्रम-**

मरीचिः काश्यप ऋषिः । त्रिष्टुप् छन्दः । दुर्गा देवता ।

**षडङ्गन्यास:-**

ॐ जातवेदसे सुनवाम हृदयाय नमः ।
ॐ सोममरातीयतः शिरसे स्वाहा ।
ॐ निदहाति वेदः शिखायै वषट् ।
ॐ स नः पर्षदति कवचाय हुम् ।
ॐ दुर्गाणि विश्वा नावेव नेत्रत्रयाय वौषट् ।
ॐ सिन्धु दुरितात्युग्निः अस्त्राय फट् ॥

**ध्यानम्-**

**या माया मधुकैटभप्रमथिनी या माहिषोन्मर्दिनी ।
या धूम्रेक्षण चण्डमुण्डमथिनी या रक्तबीजाशिनी ॥
या सा शुम्भनिशुम्भदैत्यदलिनी या सिद्धलक्ष्मीः स्थिरा।
सा चण्डी नवकोटिमूर्तिसहिता मां पातु दुर्गाम्बिका ।।**



**ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्युग्निः ॥**
इति जपम् ।।

॥ अथ पञ्चोपचारपूजां करिष्ये ॥
ॐ लं पृथिव्यात्मिकायै नमः । गन्धं समर्पयामि ॥
ॐ हं आकाशात्मिकायै • पुष्पं स ० ॥
ॐ यं वाय्वात्मिकायै • धूपं स ० ॥
ॐ रं तेजोमय्यै० दीपं स० ॥

ॐ वं अमृतात्मिकायै ० नैवेद्यं स ० ॥
इति पञ्चोपचारपूजां समर्प्य ॥

## अथ द्वादशनामपूजां करिष्ये ॥

**ॐ अनेकरत्नरचितायै नमः।**
**ॐ दिव्यसिंहासनस्थिताय नमः।**
**ॐ स्रग्धराय नमः।**
**ॐ धृत्यै नम :।**
**ॐ मेधाय नमः।**
**ॐ काळ्यै नमः।**
**ॐ भद्रकाल्यै नमः।**
**ॐ अम्बिकायै नमः।**
**ॐ वेदगर्भायै नमः।**
**ॐ शिवदूत्यै नमः।**
**ॐ शाम्भव्य नमः।**
**ॐ शङ्खचक्रधारिण्यै नमः ॥**

द्वादशनामपूजां समर्पयामि ॥
॥ अथाङ्गपूजा दिसमर्पणान्तं पूर्ववत् ॥

# ॥ अथ तृतीयायां महिषासुरमर्दिनीदुर्गापूजा ॥

कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, श्रीमहाकाली महालक्ष्मी महासरस्वतीप्रीत्यर्थं आश्विनशुक्लतृतीयायां **महिषासुरमर्दिनीदुर्गापूजा** करिष्ये। ॥ इति सङ्कल्प्य भूशुद्ध्यादिपीठपूजान्तं कृत्वा ॥

[अथ तत्रागमोक्तप्रकारेण सङ्क्षेपभूशुद्ध्यादिविधिः ।।

**ॐलं पृथिव्यैः नमः ।** इति भूमि सम्पूज्य तत्र
'**ॐ ही आधारशक्तिकमलासनाय नमः**' इत्यासने उपविश्य
'**ॐ ह्रीं चामुण्डायै नमः**' इति शिखांबध्वा
स्ववामे '**गुरुभ्यो नमः**' दक्षे '**गणपतये नमः**' इति गुरुवन्दनं कृत्वा'
**ॐ जयध्वनिमन्त्रमातः स्वाहा**' इति घण्टां वादयिता
'**ॐ ह्रीं सर्वविघ्नानुत्सारय हुं फट् स्वाहा**' इति विघ्नानुत्सार्य
'**ॐ नमः सहस्रार हुं फट्** ' इति तालत्रयेण दिग्बन्धनं कृत्वा
**तीक्ष्णदंष्ट्रेति महाकाय कल्पान्त दहनोपम।**
**भैरवाय नमस्तुभ्यं अनुज्ञा दातुमर्हसि ।।** इति क्षेत्रपालं सम्प्रार्थ्य
**ॐ हंसःसोऽहमिति** भूतशुद्धि पूर्वोत्तमाणप्रतिष्ठा मातृकान्यासं कलशार्चनं शङ्खार्चनं च कृत्वा,
**मण्डपदेवताभ्यो नमः । द्वारदेवताभ्यो नमः । द्वारपालेभ्यो नमः । पीठदेवताभ्यो नमः।** इति पूजयेत् ]

**ॐ नन्दायै नमः।**
**ॐ शाकम्भर्यै नमः।**
**ॐ रक्तदन्तिकायै नमः।**
**ॐ शताक्षिण्यै नमः।**
**ॐ भीमायै नमः।**

**ॐ भ्रामयै नमः।**
**ॐ दुर्गायै नमः।**
**ॐ शिवदूत्यै नमः।**
**ॐ प्रजेश्वर्यै नमः।**

नवशक्तिपूजां समर्पयामि ॥

**गौराङ्गी द्विभुजां देवीं कमलद्वयधारिणीम्।**
**सिंहारूढां तृतीयायां गौरवस्त्रां प्रपूजयेत् ॥**
**ॐ नमो भगवत्यै सुवर्णपीठं कल्पयामि ॥**
**स्वात्मसंस्थामजां मूर्तावावाहयाम्यहम् ।।**

**ॐ नमो भगवत्यै वज्रनखदंष्ट्रायुधमहासिंहवाहनायै योगपद्मपीठात्मिकायै नमः सुवर्णपीठं कल्पयामि ।।**

**आवाहनम्-**
**स्वात्मसंस्थामजां शुद्धां त्वामद्य परमेश्वरि ।**
**अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ॥**

**ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥**
**भूर्भुवः स्स्वरों सशक्ति- साङ्ग- सायुध- सवाहन- सपरिवार- सर्वालङ्कारभूषितां श्रीमहिषासुरमर्दिनीदुर्गामावाहयामि ।।**
आवाहिता भव ।
संस्थापिता भव ।
सन्निहिता भव ।
सन्निरुद्धा भव ।
सम्मुखीकरणा भव ।
सुप्रसन्ना भव' इति षण्मुद्राः प्रदर्श्य ॥
**ॐ कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः**

प्रचोदयात् ।। इदमर्घ्यम् ।।

**ऋष्यादिन्यासक्रम-**

मरीचिः काश्यप ऋषिः । त्रिष्टुप् छन्दः । दुर्गा देवता ।

**षडङ्गन्यासः-**

ॐ जातवेदसे सुनवाम हृदयाय नमः ।
ॐ सोममरातीयतः शिरसे स्वाहा ।
ॐ निदहाति वेदः शिखायै वषट् ।
ॐ स नः पर्षदति कवचाय हुम् ।
ॐ दुर्गाणि विश्वा नावेव नेत्रत्रयाय वौषट् ।
ॐ सिन्धु दुरितात्यग्निः अस्त्राय फट् ॥

**ध्यानम्-**

**या माया मधुकैटभप्रमथिनी या माहिषोन्मर्दिनी ।**
**या धूम्रेक्षण चण्डमुण्डमथिनी या रक्तबीजाशिनी ॥**
**या सा शुम्भनिशुम्भदैत्यदलिनी या सिद्धलक्ष्मीः स्थिरा।**
**सा चण्डी नवकोटिमूर्तिसहिता मां पातु दुर्गाम्बिका ।।**

**ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥**
इति जपम् ।।

॥ अथ पञ्चोपचारपूजां करिष्ये ॥

ॐ लं पृथिव्यात्मिकायै नमः । गन्धं समर्पयामि ॥
ॐ हं आकाशात्मिकायै • पुष्पं स ० ॥
ॐ यं वाय्वात्मिकायै • धूपं स ० ॥
ॐ रं तेजोमय्यै० दीपं स० ॥
ॐ वं अमृतात्मिकायै ० नैवेद्यं स ० ॥
इति पञ्चोपचारपूजां समर्प्य ।।

**अथ द्वादशनामपूजां करिष्ये ।।**

ॐ शङ्खधारिण्यै नमः।
ॐ चक्रधारिण्यै नमः।
ॐ वज्रधारिण्यै नमः।
ॐ खड्गधारिण्यै नमः।
ॐ अङ्कुशधारिण्यै नमः।
ॐ शूलधारिण्यै नमः।
ॐ आर्यायै नमः।
ॐ दुर्गायै नमः।
ॐ वेदस्वरूपिण्यै नमः।
ॐ अम्बिकायै नमः।
ॐ भद्रकाळ्यै नमः।
ॐ महाकाळ्यै नमः ॥
इति द्वादशनामपूजां समर्पयामि ॥

॥ अथाङ्गपूजादिसमर्पणान्तं पूर्ववत् ।। ॥

# ॥ अथ चतुर्थ्यां शैलजादुर्गापूजा ॥

कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, श्रीमहाकाली महालक्ष्मी महासरस्वतीप्रीत्यर्थं **आश्विनशुक्ल**चतुर्थ्यां शैलजादुर्गापूजा करिष्ये। इति सङ्कल्प्य

**अथ तत्रागमोक्तप्रकारेण सङ्क्षेपभूशुद्ध्यादिविधिः ॥**

**ॐलं पृथिव्यैः नमः ।** इति भूमि सम्पूज्य तत्र
**'ॐ ही आधारशक्तिकमलासनाय नमः'** इत्यासने उपविश्य
**'ॐ ह्रीं चामुण्डायै नमः'** इति शिखांबध्वा
स्ववामे **'गुरुभ्यो नमः'** दक्षे **' गणपतये नमः'** इति गुरुवन्दनं कृत्वा'
**ॐ जयध्वनिमन्त्रमातः स्वाहा'** इति घण्टां वादयिता
**'ॐ ह्रीं सर्वविघ्नानुत्सारय हुं फट् स्वाहा'** इति विघ्नानुत्सार्य
**'ॐ नमः सहस्रार हुं फट्** ' इति तालत्रयेण दिग्बन्धनं कृत्वा
**तीक्ष्णदंष्ट्रेति महाकाय कल्पान्त दहनोपम।**
**भैरवाय नमस्तुभ्यं अनुज्ञा दातुमर्हसि ॥** इति क्षेत्रपालं सम्प्रार्थ्य
**ॐ हंसःसोऽहमिति** भूतशुद्धि पूर्वोत्तमाणप्रतिष्ठा मातृकान्यासं कलशार्चनं शङ्खार्चनं च कृत्वा,
**मण्डपदेवताभ्यो नमः । द्वारदेवताभ्यो नमः । द्वारपालेभ्यो नमः । पीठदेवताभ्यो नमः।** इति पूजयेत् ]

**नवशक्तिपूजां करिष्ये॥**

**ॐ कौशिक्यै नमः।**
**ॐ महिपन्यै नमः।**
**ॐ सर्वशक्तिसमन्वितायै नमः।**
**ॐ सर्वस्वरूपिण्यै नमः।**

**ॐ कौमाय नमः।**
**ॐ अम्बिकायै नमः।**
**ॐ वेदगर्भायै नमः।**
**ॐ महालक्ष्म्यै नमः।**
**ॐ विन्ध्याचलनिवासिन्यै नमः।**

नवशक्तिपूजां समर्पयामि ।।

**रक्तवर्णा चतुर्बाहुं रक्तवस्त्राद्यलङ्कृताम्।**
**पाशाङ्कुशमातुलुङ्गभरां मूषिकवाहिनीम्।**
**रक्तपुष्पाक्षतैः पूज्यां चतुर्थ्यां पूजयेन्नृप ॥**

**ॐ नमो भगवत्यै वज्रनखदंष्ट्रायुधमहासिंहवाहनायै योगपद्मपीठात्मिकायै नमः सुवर्णपीठं कल्पयामि ।।**

**आवाहनम्-**
**स्वात्मसंस्थामजां शुद्धां स्वामद्य परमेश्वरि ।**
**अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ॥**

**ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥**
**भूर्भुवः स्स्वरों सशक्ति- साङ्ग- सायुध- सवाहन- सपरिवार- सर्वालङ्कारभूषितां** शैलजादुर्गा**मावाहयामि** ।।
आवाहिता भव ।
संस्थापिता भव ।
सन्निहिता भव ।
सन्निरुद्धा भव ।
सम्मुखीकरणा भव ।
सुप्रसन्ना भव' इति षण्मुद्राः प्रदर्श्य ॥
**ॐ कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः**

प्रचोदयात् ।। इदमर्घ्यम् ।।

**ऋष्यादिन्यासक्रम-**

मरीचिः काश्यप ऋषिः । त्रिष्टुप् छन्दः । दुर्गा देवता ।

**षडङ्गन्यास:-**

ॐ जातवेदसे सुनवाम हृदयाय नमः ।
ॐ सोममरातीयतः शिरसे स्वाहा ।
ॐ निदहाति वेदः शिखायै वषट् ।
ॐ स नः पर्षदति कवचाय हुम् ।
ॐ दुर्गाणि विश्वा नावेव नेत्रत्रयाय वौषट् ।
ॐ सिन्धु दुरितात्यग्निः अस्त्राय फट् ॥

**ध्यानम्-**

**या माया मधुकैटभप्रमथिनी या माहिषोन्मर्दिनी ।**
**या धूम्रेक्षण चण्डमुण्डमथिनी या रक्तबीजाशिनी ॥**
**या सा शुम्भनिशुम्भदैत्यदलिनी या सिद्धलक्ष्मीः स्थिरा।**
**सा चण्डी नवकोटिमूर्तिसहिता मां पातु दुर्गाम्बिका ।।**

ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥
इति जपम् ।।

॥ अथ पञ्चोपचारपूजां करिष्ये ॥

ॐ लं पृथिव्यात्मिकायै नमः । गन्धं समर्पयामि ॥
ॐ हं आकाशात्मिकायै • पुष्पं स ० ॥
ॐ यं वाय्वात्मिकायै • धूपं स ० ॥
ॐ रं तेजोमय्यै० दीपं स० ॥
ॐ वं अमृतात्मिकायै ० नैवेद्यं स ० ॥
इति पञ्चोपचारपूजां समर्प्य ॥

अथ द्वादशनामपूजां करिष्ये ॥

ॐ कौमार्यै नमः।
ॐ क्षेमकर्यै नमः।
ॐ विन्ध्याचलनिवासिन्यै नमः।
ॐ शुम्भासुरनिहन्त्यै नमः।
ॐ निशुम्भासुरमर्दिन्यै नमः।
ॐ महिषासुरहव्यै नमः।
ॐ चण्डमुण्डनिहन्त्र्यै नमः।
ॐ रक्तवीजनिहन्त्र्यै नमः।
ॐ जलदुर्गायै नमः।
ॐ स्थळदुर्गायै नमः।
ॐ वनदुर्गायै नमः।
ॐ गिरिदुर्गायै नमः।

इति द्वादशनामपूजां समर्पयामि ॥

॥ अथाङ्गपूजादिसमर्पणान्तं पूर्ववत् ।।

# ॥ अथ पञ्चम्यां धूम्रहादुर्गापूजा ॥

कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, श्रीमहाकाली महालक्ष्मी महासरस्वतीप्रीत्यर्थं आश्विन शुक्लपञ्चम्यां **धूम्रहादुर्गापूजां** करिष्ये। इति सङ्कल्प्य

अथ तत्रागमोक्तप्रकारेण सङ्क्षेपभूशुद्ध्यादिविधिः ।।

**ॐलं पृथिव्यैः नमः ।** इति भूमि सम्पूज्य तत्र
**'ॐ ह्री आधारशक्तिकमलासनाय नमः'** इत्यासने उपविश्य
**'ॐ ह्रीं चामुण्डायै नमः'** इति शिखांबध्वा
स्ववामे **'गुरुभ्यो नमः'** दक्षे **' गणपतये नमः'** इति गुरुवन्दनं कृत्वा'
**ॐ जयध्वनिमन्त्रमातः स्वाहा'** इति घण्टां वादयिता
**'ॐ ह्रीं सर्वविघ्नानुत्सारय हुं फट् स्वाहा'** इति विघ्नानुत्सार्य
**'ॐ नमः सहस्रार हुं फट् '** इति तालत्रयेण दिग्बन्धनं कृत्वा
**तीक्ष्णदंष्ट्रेति महाकाय कल्पान्त दहनोपम।**
**भैरवाय नमस्तुभ्यं अनुज्ञा दातुमर्हसि ।।** इति क्षेत्रपालं सम्प्रार्थ्य
**ॐ हंसःसोऽहमिति** भूतशुद्धि पूर्वोत्तमाणप्रतिष्ठा मातृकान्यासं कलशार्चनं शङ्खार्चनं च कृत्वा,
**मण्डपदेवताभ्यो नमः । द्वारदेवताभ्यो नमः । द्वारपालेभ्यो नमः । पीठदेवताभ्यो नमः।** इति पूजयेत् ]

नवशक्तिपूजां करिष्ये ॥
**ॐ कुमार्यै नमः।**
**ॐ त्रिमूर्त्यै नमः।**
**ॐ कल्याण्यै नमः।**
**ॐ रोहिण्यै नमः।**

**ॐ काळ्यै नमः।**
**ॐ नवदुर्गायै नमः**
**ॐ चण्ड्यै नमः।**
**ॐ शाम्भव्यै नमः।**
**ॐ दुर्गायै नमः।**

नवशक्तिपूजां समर्पयामि ॥

**चतुर्भुजां सुवर्णाभां शङ्खचक्रगदाम्बुजाम्।**
**पञ्चम्यां पूजयेद्देवीं सदा मकरवाहिनीम् ॥**
**ॐ नमो भगवत्यै सुवर्णपीठं कल्पयामि ॥**
**स्वात्मसंस्थामजां मूर्तावावाहयाम्यहम् ।।**

**ॐ नमो भगवत्यै वज्रनखदंष्ट्रायुधमहासिंहवाहनायै योगपद्मपीठात्मिकायै नमः सुवर्णपीठं कल्पयामि ।।**

**आवाहनम्-**
**स्वात्मसंस्थामजां शुद्धां त्वामद्य परमेश्वरि ।**
**अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ॥**

**ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥**
**भूर्भुवः स्स्वरों सशक्ति- साङ्ग- सायुध- सवाहन- सपरिवार- सर्वालङ्कारभूषितां श्रीधूम्रहादुर्गामावाहयामि ।।**
आवाहिता भव ।
संस्थापिता भव ।
सन्निहिता भव ।
सन्निरुद्धा भव ।
सम्मुखीकरणा भव ।
सुप्रसन्ना भव' इति षण्मुद्राः प्रदर्श्य ॥

**ॐ कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् ।।** इदमर्घ्यम् ।।

**ऋष्यादिन्यासक्रम-**

मरीचिः काश्यप ऋषिः । त्रिष्टुप् छन्दः । दुर्गा देवता ।

**षडङ्गन्यासः-**

ॐ जातवेदसे सुनवाम हृदयाय नमः ।
ॐ सोममरातीयतः शिरसे स्वाहा ।
ॐ निदहाति वेदः शिखायै वषट् ।
ॐ स नः पर्षदति कवचाय हुम् ।
ॐ दुर्गाणि विश्वा नावेव नेत्रत्रयाय वौषट् ।
ॐ सिन्धु दुरितात्यग्निः अस्त्राय फट् ॥

**ध्यानम्-**

**या माया मधुकैटभप्रमथिनी या माहिषोन्मर्दिनी ।**
**या धूम्रेक्षण चण्डमुण्डमथिनी या रक्तबीजाशिनी ॥**
**या सा शुम्भनिशुम्भदैत्यदलिनी या सिद्धलक्ष्मीः स्थिरा।**
**सा चण्डी नवकोटिमूर्तिसहिता मां पातु दुर्गाम्बिका ।।**

**ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥**
इति जपम् ।।

॥ अथ पञ्चोपचारपूजां करिष्ये ॥
ॐ लं पृथिव्यात्मिकायै नमः । गन्धं समर्पयामि ॥
ॐ हं आकाशात्मिकायै • पुष्पं स ० ॥
ॐ यं वाय्वात्मिकायै • धूपं स ० ॥
ॐ रं तेजोमय्यै० दीपं स० ॥
ॐ वं अमृतात्मिकायै ० नैवेद्यं स ० ॥

**इति पञ्चोपचारपूजां समर्प्य ॥**

अथ द्वादशनामपूजां करिष्ये ॥

ॐ अनेकभेदभजिन्यै नमः।
ॐ दुर्गामूत्यै नमः।
ॐ अष्टादशभुजबलध्वंसिन्यै नमः।
ॐ शत्रुभञ्जिन्यै नमः।
ॐ तापत्रयध्वंसिन्यै नमः।
ॐ सर्वसम्पत्प्रदायिन्यै नमः।
ॐ सर्वारिष्टविनाशिन्यै नमः।
ॐ त्रिदशवन्दिताय नमः।
ॐ सर्वदेवस्वरूपिण्यै नमः।
ॐ शाकम्भय नमः।
ॐ रक्तदन्तिकाय नमः।
ॐ अतिसौम्यायै नमः।

इति द्वादशनामपूजां समर्पयामि ॥

।।अथाङ्गादिसमर्पणान्तं पूर्ववत् ।।

# ॥ अथ षष्ठयां चण्डमुण्डहादुर्गापूजा ॥

कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, श्रीमहाकाली महालक्ष्मी महासरस्वतीप्रीत्यर्थं आश्विन शुक्लषष्ठ्यां **चण्डमुण्डहादुर्गापूजां** करिष्ये। इति सङ्कल्प्य

**अथ तत्रागमोक्तप्रकारेण सङ्क्षेपभूशुद्ध्यादिविधिः ।।**

**ॐलं पृथिव्यैः नमः ।** इति भूमि सम्पूज्य तत्र
**'ॐ ही आधारशक्तिकमलासनाय नमः'** इत्यासने उपविश्य
**'ॐ ह्रीं चामुण्डायै नमः'** इति शिखांबध्वा
स्ववामे **'गुरुभ्यो नमः'** दक्षे **' गणपतये नमः'** इति गुरुवन्दनं कृत्वा' **ॐ जयध्वनिमन्त्रमातः स्वाहा'** इति घण्टां वादयिता
**'ॐ ह्रीं सर्वविघ्नानुत्सारय हुं फट् स्वाहा'** इति विघ्नानुत्सार्य
**'ॐ नमः सहस्रार हुं फट् '** इति तालत्रयेण दिग्बन्धनं कृत्वा

**तीक्ष्णदंष्ट्रेति महाकाय कल्पान्त दहनोपम।**
**भैरवाय नमस्तुभ्यं अनुज्ञा दातुमर्हसि ।।**
इति क्षेत्रपालं सम्प्रार्थ्य
**ॐ हंसःसोऽहमिति** भूतशुद्धि पूर्वोत्तमाणप्रतिष्ठा मातृकान्यासं कलशार्चनं शङ्खार्चनं च कृत्वा,
**मण्डपदेवताभ्यो नमः । द्वारदेवताभ्यो नमः । द्वारपालेभ्यो नमः । पीठदेवताभ्यो नमः।** इति पूजयेत् ]

नवशक्तिपूजां करिष्ये ॥
**ॐ गजारूढायै नमः।**
**ॐ हंसारूढायै नमः।**
**ॐ सिंहारूढायै नमः।**
**ॐ मूपिकवाहिन्यै नमः।**

**ॐ मकरवाहनाय नमः।**
**ॐ मयूरवाहिन्यै नमः।**
**ॐ रथारूढायै नमः।**
**ॐ वृपारूढायै नमः।**
**ॐ पञ्चाननवाहनायै नमः।**
नवशक्तिपूजां समर्पयामि ॥

**स्वर्णवस्त्राद्यलङ्कारैः स्फटिकैरुपशोभिताम्।**
**बाणकोदण्डखेटांश्च शक्तिं धृतवतीं करैः।**
**मयूरवाहिनीं देवीं षष्ठ्यां सम्पूजयेनृप ॥**

**ॐ नमो भगवत्यै वज्रनखदंष्ट्रायुधमहासिंहवाहनायै योगपद्मपीठात्मिकायै नमः सुवर्णपीठं कल्पयामि ।।**

**आवाहनम्-**
**स्वात्मसंस्थामजां शुद्धां स्वामद्य परमेश्वरि ।**
**अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ॥**

**ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥**
**भूर्भुवः स्स्वरों सशक्ति- साङ्ग- सायुध- सवाहन- सपरिवार- सर्वालङ्कारभूषितां चण्डमुण्डहादुर्गामावाहयामि ।।**
आवाहिता भव ।
संस्थापिता भव ।
सन्निहिता भव ।
सन्निरुद्धा भव ।
सम्मुखीकरणा भव ।
सुप्रसन्ना भव' इति षण्मुद्राः प्रदर्श्य ॥
**ॐ कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः**

**प्रचोदयात् ।।** इदमर्घ्यम् ।।

**ऋष्यादिन्यासक्रम-**

मरीचिः काश्यप ऋषिः । त्रिष्टुप् छन्दः । दुर्गा देवता ।

**षडङ्गन्यासः-**

ॐ जातवेदसे सुनवाम हृदयाय नमः ।
ॐ सोममरातीयतः शिरसे स्वाहा ।
ॐ निदहाति वेदः शिखायै वषट् ।
ॐ स नः पर्षदति कवचाय हुम् ।
ॐ दुर्गाणि विश्वा नावेव नेत्रत्रयाय वौषट् ।
ॐ सिन्धु दुरितात्यग्निः अस्त्राय फट् ॥

**ध्यानम्-**

**या माया मधुकैटभप्रमथिनी या माहिषोन्मर्दिनी ।**
**या धूम्रेक्षण चण्डमुण्डमथिनी या रक्तबीजाशिनी ॥**
**या सा शुम्भनिशुम्भदैत्यदलिनी या सिद्धलक्ष्मीः स्थिरा।**
**सा चण्डी नवकोटिमूर्तिसहिता मां पातु दुर्गाम्बिका ।।**

**ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥**

इति जपम् ।।

॥ अथ पञ्चोपचारपूजां करिष्ये ॥

ॐ लं पृथिव्यात्मिकायै नमः । गन्धं समर्पयामि ॥
ॐ हं आकाशात्मिकायै • पुष्पं स ० ॥
ॐ यं वाय्वात्मिकायै • धूपं स ० ॥
ॐ रं तेजोमय्यै० दीपं स० ॥
ॐ वं अमृतात्मिकायै ० नैवेद्यं स ० ॥

**इति पञ्चोपचारपूजां समर्प्य ॥**

अथ द्वादशनामपूजां करिष्ये ॥

ॐ  ख्यात्यै नमः।
ॐ जगत्प्रतिष्ठायै नमः।
ॐ शताक्षिण्यै नमः।
ॐ जगद्धितायै नमः।
ॐ भीमायै नमः।
ॐ देव्यै नमः।
ॐ शिवायै नमः।
ॐ भद्रायै नमः।
ॐ कल्याण्यै नमः।
ॐ प्रकृत्यै नमः।
ॐ प्रणतार्तिनाशिन्यै नमः।
ॐ विप्रप्रियायै नमः ॥
इति द्वादशनामपूजां समर्पयामि ॥

**॥ अथाङ्गपूजादिसमर्पणान्तं पूर्ववत् ॥**

# ॥ अथ सप्तम्यां रक्तबीजहादुर्गापूजा ॥

कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, श्रीमहाकाली महालक्ष्मी महासरस्वतीप्रीत्यर्थं आश्विन शुक्लसप्तम्यां रक्तबीजहादुर्गापूजां करिष्ये। इति सङ्कल्प्य

अथ तत्रागमोक्तप्रकारेण सङ्क्षेपभूशुद्ध्यादिविधिः ।।

**ॐलं पृथिव्यैः नमः ।** इति भूमि सम्पूज्य तत्र
'**ॐ ही आधारशक्तिकमलासनाय नमः**' इत्यासने उपविश्य
'**ॐ ह्रीं चामुण्डायै नमः**' इति शिखांबध्वा
स्ववामे '**गुरुभ्यो नमः**' दक्षे ' **गणपतये नमः**' इति गुरुवन्दनं कृत्वा' **ॐ जयध्वनिमन्त्रमातः स्वाहा**' इति घण्टां वादयिता
'**ॐ ह्रीं सर्वविघ्नानुत्सारय हुं फट् स्वाहा**' इति विघ्नानुत्सार्य
'**ॐ नमः सहस्रार हुं फट्** ' इति तालत्रयेण दिग्बन्धनं कृत्वा

**तीक्ष्णदंष्ट्रेति महाकाय कल्पान्त दहनोपम।**
**भैरवाय नमस्तुभ्यं अनुज्ञा दातुमर्हसि ।।**
इति क्षेत्रपालं सम्प्रार्थ्य
**ॐ हंसःसोऽहमिति** भूतशुद्धि पूर्वोत्तमाणप्रतिष्ठा मातृकान्यासं कलशार्चनं शङ्खार्चनं च कृत्वा,
**मण्डपदेवताभ्यो नमः । द्वारदेवताभ्यो नमः । द्वारपालेभ्यो नमः । पीठदेवताभ्यो नमः**। इति पूजयेत्

नवशक्तिपूजां करिष्ये ॥
**ॐ रक्तवर्णायै नमः।**
**ॐ शुक्लवर्णायै नमः।**
**ॐ गौरवर्णायै नमः।**

**ॐ रक्तवर्णायै नमः।**
**ॐ स्वर्णवर्णायै नमः।**
**ॐ कनकवर्णायै नमः।**
**ॐ रक्तवर्णायै नमः।**
**ॐ श्वेतवर्णायै नमः।**
**ॐवर्णवर्णायै नमः।**

**ॐ नमो भगवत्यै वज्रनखदंष्ट्रायुधमहासिंहवाहनायै योगपद्मपीठात्मिकायै नमः सुवर्णपीठं कल्पयामि ।।**

**आवाहनम्-**
**स्वात्मसंस्थामजां शुद्धां स्वामद्य परमेश्वरि ।**
**अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ॥**

**ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥**
**भूर्भुवः स्स्वरों सशक्ति- साङ्ग- सायुध- सवाहन- सपरिवार- सर्वालङ्कारभूषितां** चण्डमुण्डहादुर्गा**मावाहयामि ।।**
आवाहिता भव ।
संस्थापिता भव ।
सन्निहिता भव ।
सन्निरुद्धा भव ।
सम्मुखीकरणा भव ।
सुप्रसन्ना भव' इति षण्मुद्राः प्रदर्श्य ॥
**ॐ कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् ।।** इदमर्घ्यम् ।।
**ऋष्यादिन्यासक्रम-**
मरीचिः काश्यप ऋषिः । त्रिष्टुप् छन्दः । दुर्गा देवता ।
**षडङ्गन्यासः-**
ॐ जातवेदसे सुनवाम हृदयाय नमः ।

ॐ सोममरातीयतः शिरसे स्वाहा ।
ॐ निदहाति वेदः शिखायै वषट् ।
ॐ स नः पर्षदति कवचाय हुम् ।
ॐ दुर्गाणि विश्वा नावेव नेत्रत्रयाय वौषट् ।
ॐ सिन्धु दुरितात्यग्निः अस्त्राय फट् ॥

**ध्यानम्-**

**या माया मधुकैटभप्रमथिनी या माहिषोन्मर्दिनी ।**
**या धूम्रेक्षण चण्डमुण्डमथिनी या रक्तबीजाशिनी ॥**
**या सा शुम्भनिशुम्भदैत्यदलिनी या सिद्धलक्ष्मीः स्थिरा।**
**सा चण्डी नवकोटिमूर्तिसहिता मां पातु दुर्गाम्बिका ।।**

**ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥**
इति जपम् ।।

॥ अथ पञ्चोपचारपूजां करिष्ये ॥
ॐ लं पृथिव्यात्मिकायै नमः । गन्धं समर्पयामि ॥
ॐ हं आकाशात्मिकायै • पुष्पं स ० ॥
ॐ यं वाय्वात्मिकायै • धूपं स ० ॥
ॐ रं तेजोमय्यै० दीपं स० ॥
ॐ वं अमृतात्मिकायै ० नैवेद्यं स ० ॥
**इति पञ्चोपचारपूजां समर्प्य ॥**

अथ द्वादशनामपूजां करिष्ये ॥
**ॐ चेतनामिष्टकायै नमः।**
**ॐ जगदात्मशक्त्यै नमः।**
**ॐ चण्डिकायै नमः।**
**ॐ अम्बिकायै नमः।**
**ॐ त्रिरूपिण्यै नमः।**

**ॐ सर्वाश्रयायै नमः।**
**ॐ स्वाहायै नमः।**
**ॐ स्वधायै नमः।**
**ॐ विद्यायै नमः।**
**ॐ सर्वात्मिकायै नमः।**
**ॐ मेधायै नमः।**
**ॐ परार्तिहारिण्यै नमः ॥**
इति द्वादशनामपूजां समर्पयामि ॥

॥ अथाङ्ग पूजादिसमर्पणान्तं पूर्ववत् ॥

# ।। अथ अष्टम्यां निशुम्भहादुर्गापूजा ।।

कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, श्रीमहाकाली महालक्ष्मी महासरस्वतीप्रीत्यर्थं आश्विनशुक्लाष्टम्यां **निशुम्भहादुर्गापूजां** करिष्ये। इति सङ्कल्प्य

अथ तत्रागमोक्तप्रकारेण सङ्क्षेपभूशुद्ध्यादिविधिः ।।

**ॐलं पृथिव्यैः नमः ।** इति भूमि सम्पूज्य तत्र
'**ॐ ही आधारशक्तिकमलासनाय नमः**' इत्यासने उपविश्य
'**ॐ ह्रीं चामुण्डायै नमः**' इति शिखांबध्वा
स्ववामे '**गुरुभ्यो नमः**' दक्षे ' **गणपतये नमः**' इति गुरुवन्दनं कृत्वा' **ॐ जयध्वनिमन्त्रमातः स्वाहा**' इति घण्टां वादयिता
'**ॐ ह्रीं सर्वविघ्नानुत्सारय हुं फट् स्वाहा**' इति विघ्नानुत्सार्य
'**ॐ नमः सहस्रार हुं फट्** ' इति तालत्रयेण दिग्बन्धनं कृत्वा

**तीक्ष्णदंष्ट्रेति महाकाय कल्पान्त दहनोपम।**
**भैरवाय नमस्तुभ्यं अनुज्ञा दातुमर्हसि ।।**
इति क्षेत्रपालं सम्प्रार्थ्य
**ॐ हंसःसोऽहमिति** भूतशुद्धि पूर्वोत्तमाणप्रतिष्ठा मातृकान्यासं कलशार्चनं शङ्खार्चनं च कृत्वा,
**मण्डपदेवताभ्यो नमः । द्वारदेवताभ्यो नमः । द्वारपालेभ्यो नमः । पीठदेवताभ्यो नमः।** इति पूजयेत्

**।। नवशक्तिपूजां करिष्ये ।।**

**ॐ शक्तिशूलगदाभयधारिण्यै नमः।**
**ॐ सुक्खुवकमण्डल्वक्षधारिण्यै नमः।**
**ॐ कह्लारद्वयधारिण्यै नमः।**
**ॐ पाशाङ्कुशमातुलुङ्गाभयधारिण्यै नमः।**

ॐ शङ्खचक्रगदाम्बुजधारिण्यै नमः।
ॐ बाणकोदण्डखेटशक्तिधारिण्यै नमः।
ॐ अम्बुजद्वयधारिण्यै नमः।
ॐ त्रिशूलडमरुचर्मखट्वाङ्गधारिण्यै नमः।
ॐ अक्षमाला- रविन्द-मार्गणसरुपूरक-भिदुरगदारथाङ्ग- शूलकुठार-शङ्खाभयपाश-शक्तियष्टिखेटशरासनपात्र-कमण्डलुधारिण्यै नमः।

नवशक्तिपूजां समर्पयामि ॥

श्वेतवस्त्राद्यलङ्कारैर्भूषितां च चतुर्भुजाम्।
त्रिशूलं डमरुं चैव चर्मखट्वाङ्गधारिणीम्।
अष्टम्यां पूजयेद्देवीं वृषारूढांप्रयत्नतः ॥

ॐ नमो भगवत्यै वज्रनखदंष्ट्रायुधमहासिंहवाहनायै योगपद्मपीठात्मिकायै नमः सुवर्णपीठं कल्पयामि ।।

आवाहनम्-
स्वात्मसंस्थामजां शुद्धां स्वामद्य परमेश्वरि ।
अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ॥

ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥
भूर्भुवः स्स्वरों सशक्ति- साङ्ग- सायुध- सवाहन- सपरिवार-सर्वालङ्कारभूषितां च निशुम्भहादुर्गामावाहयामि ।।
आवाहिता भव ।
संस्थापिता भव ।
सन्निहिता भव ।
सन्निरुद्धा भव ।
सम्मुखीकरणा भव ।
सुप्रसन्ना भव' इति षण्मुद्राः प्रदर्श्य ॥